# सर्वार्थसिद्धिः

## श्रीमत्पूज्यपादाचार्यविरचिता.



" राजूबाई भ्रतार वीरचंद धाराशीवकर
आवलबाई भ्रतार आमीचंद धाराशीवकर "

अनयोः साहाय्येन

कोल्हापूरनगरे " कल्लाप्पा भरमाप्पा निटवे " इत्यनेन
स्वकीये जैनेन्द्रमुद्रणालये मुद्रिता

---

शकाब्दाः १८३९. ज्येष्ठशुक्ला पञ्चमी

द्वितीय संस्करणम्

मूल्य रूप्यकद्वयम्.

# भूमिका.



स्वस्ति सकलजगदुदयकरणोदितातिशयगुणास्पदीभूतपरमजिनशासनसरस्समभिवर्धितभव्यजनकमलविकसनवितिमिरगुणकिरण सहस्रमहोऽतिमहावीरसवितरि परिनिर्वृते भगवत्परमर्षिगौतमगणधरसाक्षाच्छिष्यलोहार्यजम्बुविष्णुदेवापराजितगोवर्धनभद्रबाहुविशाखप्रौष्ठिलक्षत्रिकार्यजयनामसिद्धार्थधृतिषेणबुद्धिलादिगुरुपरम्परीणमहापुरुषसन्ततिसमवद्योतितान्वय भद्रबाहुस्वामितत्साक्षाच्छिष्यचन्द्रगुप्तान्वये नन्दिगणे मिथ्यादृष्टियुक्त्याभासतमःपटलविपाटनपटुप्रतिमातिशयालंकृता नानाभव्याब्जखण्डप्रततिविकसनश्रीविधानैकभानवो द्वादशविधतपश्चरणकिरणदीप्त्या प्रकाशमानविग्रहाः संसाराम्भोधिमार्गतरणकरणतायानरत्नत्रयेशाः सम्यग्जैनागमार्थान्वितविमलमतयोऽनेके दिगम्बराचार्याः प्रादुरभूवन् ॥ तेषु— सत्संयमयोगात्प्राप्तचारणर्द्धिः श्रीपद्मनन्द्याद्यभिधानस्तत्त्वार्थाधिगममोक्षशास्त्रप्रणेता भगवानुमास्वात्याचार्यः सकलपदार्थवेदित्वेनाग्रिमा भूमिमलञ्चकार ॥ तथा हि— ॥ श्रीमन्मुनीन्द्रोत्तमरत्नवर्गाः । श्रीगौतमाद्याः प्रभविष्णवस्ते ॥ तत्राम्बुधौ सप्तमहर्द्धियुक्ता- । स्तत्सन्ततौ बोधनिधिर्बभूव ॥ १ ॥ श्रीभद्रः सर्वतो यो हि । भद्रबाहुरिति श्रुतः ॥ श्रुतकेवलिनाथेषु । चरमः परमो मुनिः ॥ २ ॥ चन्द्रप्रकाशोज्ज्वलसान्द्रकीर्तिः । श्रीचन्द्रगुप्तोऽजनि तस्य शिष्यः ॥ यस्य प्रभावाद्वनदेवताभि । राराधितः स्वस्य गणो मुनीनाम् ॥ तस्यान्वये भूविदिते बभूव । यः पद्मनन्दिप्रथमाभिधान. ॥ श्रीकुन्दकुन्दादिमुनीश्वराख्यः । सत्संयमादुद्गतचारणर्द्धिः ॥ ४ ॥ अभूदुमास्वातिमुनीश्वरोऽसा- । वाचार्यशब्दोत्तरगृद्ध्रपिञ्छः ॥ तदन्वये तत्सदृ-

शोऽस्ति नान्य- । स्तात्कालिकाशेषपदार्थवेदी ॥ ५ ॥ इति सम्प्राप्तचारणर्द्धिरयं भगवान्कुन्दकुन्दाचार्यश्चैकदा जैनसिद्धान्तविपयिणीं स्वमनोगतां काञ्चनशङ्कामपाकर्तुं श्रीमदर्हत्परमेश्वरचारुचरणारविन्दद्वन्द्वाराधनार्थं विदेहक्षेत्रं चारणर्द्धिवलादाकाशमार्गेण गतवान् । गमनसम्भ्रमात्तस्य हस्तगता मयूरपिञ्छिका कापि निःसृत्याधःपतिता । तदानीमाकाशे विहरतः कस्यचिद्गृद्धस्य पिञ्छं गृहीत्वा स्वकार्यं निर्वर्त्य अग्रे गतवानिति तस्य गृध्रपिञ्छ इत्यपरं नाम सम्प्राप्तमिति कथा वृद्धपरम्परया श्रूयतेऽस्माभिः ॥ उमास्वातिरित्यत्र उमास्वामी इति निर्देशो मुनिवरश्रुतसागराभिप्रायेण ज्ञायते तत्त्वार्थवृत्तौ श्रुतसागर्यां वहुषु स्थलेषु 'उमास्वामिनः उमास्वामिना' इत्यादिपाठदर्शनात् ॥ कुन्दकुन्दाद्यभिधोऽयं भगवानुमास्वातिः स्वजन्मना कां भूमिं पवित्रीकृतवानित्यादिवृत्तं नास्माभिर्ज्ञायते साधनाभावात् । परं भगवन्महावीरतीर्थंकरनिर्वृतेः सप्तशतवर्षानन्तरमयमाचार्यो भूमिमिमां स्वजन्मना पवित्रीकृतवानिति वक्तुं शक्यते ॥ अत्र प्रमाणवचनानि निम्नोल्लिखितानि भगवज्जिनसेनाचार्यप्रणीतमहापुराणे प्रथमपर्वणि लभ्यन्ते— ( भगवान्परमर्षिर्गौतमः श्रेणिकं प्रति वक्ति )— अहं सुधर्मो जम्व्वाख्यो । निखिलश्रुतधारिण. ॥ क्रमात्कैवल्यमुत्पाद्य । निर्वास्यामस्ततो वयम् ॥ १३९ ॥ त्रयाणामस्मदादीनां कालः केवलिनामिह ॥ द्वाषष्टिवर्षपिण्डः स्याद्भगवन्निर्वृतेः परम् ॥ १४० ॥ ततो यथाक्रमं विष्णु- । र्नन्दिमित्रोऽपराजितः ॥ गोवर्द्धनो भद्रवाहु- । रित्याचार्या महाधियः ॥ १४१ ॥ चतुर्दशमहाविद्या- । स्थानानां पारगा इमे ॥ पुराणं द्योतयिष्यन्ति । कार्त्स्न्येन शरदःशतम् ॥ १४२ ॥ विशाखप्रोष्ठिलाचार्यौ । क्षत्रियो जयसाह्वयः ॥ नागसेनश्च सिद्धार्थो । धृतिषेणस्तथैव च ॥१४३॥

विजयो बुद्धिमान्गङ्ग- । देवो धर्मादिशब्दतः ॥ सेनश्च दशपूर्वाणां । धारकाः स्युर्यथाक्रमम् ॥ १४३ ॥ त्र्यशीतं शतमब्दाना- । मेतेषां कालसंग्रहः ॥ तदा च कृत्स्नमेवेदं । पुराणं विस्तरिष्यते ॥१४५॥ ततो नक्षत्रनामा च जयपालो महातपाः ॥ पाण्डुश्च ध्रुवसेनश्च । कंसाचार्य इति क्रमात् ॥ १४६ ॥ एकादशाङ्गविद्यानां । पारगाः स्युर्मुनीश्वराः ॥ विंश द्विशतमब्दाना- । मेतेषां काल इष्यते ॥ १४७ ॥ तदा पुराणमेतत्तु । पादोनं प्रथयिष्यत ॥ भाजना गवतो भूयो । जायेत ज्ञाकनिष्ठता ॥ १४८ ॥ सुभद्रश्च यशोभद्रो । भद्रबाहुर्महायशाः ॥ लोहार्यश्चेत्यमी ज्ञेयाः । प्रथमाङ्गाब्धिपारगाः ॥ १४९ ॥ समाना शतमेषा स्यात् । कालोऽष्टादशभिर्युतः ॥ तुर्यो भागः पुराणस्य । तदाऽस्य प्रतनिष्यते १५०

उपर्युक्तवचनतश्चरमो भद्रबाहुर्महावीरजिननिर्वृते. सप्तमे शतकेऽभवदिति निश्चीयते । तस्य प्रशिष्योऽयमुमास्वातिः कदा बभूवेति निर्णयम् ॥ खिस्तशतकात्पूर्वं महावीरशतकं पट्शतवार्षिकमिति प्रसिद्धिर्वर्तते । तत्प्रमाणतया गृहीतं चेदितोऽष्टादशशतवर्षतः पूर्वमयमुमास्वातिर्बभूवेति निश्चीयते ॥ अनेनार्यजननिषेव्येण भगवदुमास्वातिना मोक्षशास्त्रं व्यरचि ॥ अत्र कर्णाटभाषानिबद्धतत्त्वार्थवृत्तिप्रस्तावनातश्चेयं कथा ज्ञायते साम्प्रतं तत्पुस्तकाभावाद्यथास्मृतमत्रोदाहरिष्यामः—

आसीत् किल सौराष्ट्रे ( गुजराथ ) देशे द्वैपायकनामा कश्चिद्विद्वदग्रेसरो नित्यनैमित्तिकक्रियानुष्ठानपवित्रितान्तःकरणः श्रावकः ॥ कदाचित्स च स्वस्य स्वाध्यायार्थं मोक्षशास्त्रं रिरचयिष्यन् ' प्रत्यहमेकं सूत्रं निर्मायैव भुनज्मि नो चेदुपवास एव शरणमिति' नियमं विधाय, प्रथमेऽह्नि प्राथमिकं ' दर्शनज्ञानचारित्राणि मोक्षमार्गः ' इत्येवंरूपं सूत्रं विरच्य स्मृतिभ्रंशभयात्

क्वचित्स्वगृहस्थस्तम्भेऽलिखत् ॥ परेऽह्नि तस्मिन् श्रावके कार्यान्तरमनुरुध्य क्वचिदन्यत्र गते सति कश्चित्स्वदेहधारणमात्रावशिष्टकार्यः तदर्थं च भ्रामरीं वृत्तिमधिष्ठाय प्रतिगृहमटन् मुनिरकस्मात्तद्गृहमाजगाम । तदा मुनिदर्शनजनितानन्दरसनिर्भरं स्वान्तरात्मना वोढुमक्षमा अतएवाश्रुनिषेण तमानन्दरसं वहिस्त्यजन्तीव द्वैपायकरमणी सबहुमानं पादोपगृहादिना सत्कृत्य तं मोक्षपान्थं मुनिं परमश्रद्धयाऽभोजयत् ॥ भोजनानन्तरं तेन मुनिना स्तम्भस्थ तत्सूत्रं विलोक्य किञ्चिदिव विमृश्य सम्यगिति विशेषणेन संयुज्य तस्माद्गृहान्निरगायि । अनन्तरं स श्रावक आगत्य तत्सूत्रं ' सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः, इत्येवंविधं दृष्ट्वा केनेदं सूत्रमलङ्कृतमिति भार्यां पप्रच्छ । तया तु केनचिन्मुनिना एव कृतमित्युक्ते, स द्वैपायकः तांप्रति पुनः प्रत्याह " स मुनिवरः केदानीं गत इति " तया त्वनेन पथा गत इत्युक्ते तं मुनिप्रवरमन्वेष्टुं गृहान्निरियाय स आसन्ननिष्ठः श्रावकशिरोमणिः । अथेतस्ततोऽन्विष्याप्यप्राप्ताभीष्टोऽत एव खिन्नमना एकं वनमवजगाहे । तत्र च क्वचिदनेकविधलतागुल्मालिङ्गितनानाविधमहातरुपरिवृते आसन्नवर्तिजलनिर्झररमणीये आश्रमपदे शिलातलपर्यङ्किकानिषण्णं अनेकमुनिससेवितचरणसरोरुहं प्रशान्तगम्भीराकृतिं विष्वग्विसारिस्ववपुस्तेजसा दिशो भासयन्त भगवन्तं मुनिप्रवरं विलोक्य तदीयकान्त्याकृतिविशेषेण स एवायमित्यनुमिन्वानः स भव्यः श्रावकः पुरतो गत्वा प्रणम्य तद्दर्शनाविर्भूतानन्दाश्रुजलेन पादाववनिज्य तेन मुनिना सादरं विलोकितः कृताञ्जलिरतिष्ठत् ॥ अनन्तरमनामयं पृष्ट. स. स्वोदन्तं तादृशसूत्रविरचनावाधिकं निरूप्य " श्रीमद्भिरेवाय मोक्षमार्गप्रकाशकग्रन्थः समापनीयो नाहमस्मिन् समर्थ इति " तं मुनिं पुनः

पुनः परमादरेण 'व्यजिज्ञपत् ॥ स एव मुनिरयमुमास्वात्यमिध इत्यवगच्छन्तु कृतधियः ॥

एषु तत्त्वार्थसूत्रेषु गन्धहस्तिमहाभाष्यसञ्ज्ञकं चतुरशीति-सहस्रश्लोकपरिमितं भगवत्समन्तभद्राचार्यविरचितं भाष्यं वर्तते इति श्रृणुमः परं न लब्धमस्माभिः क्वापि। तथा श्रुतसागरी सुबोधिनी इत्यभिधा अनेक वृत्तयश्च सन्ति। तासु च काश्चिदिदानीमपि लभ्यन्ते। तास्वपि इयं पूज्यपादाचार्यविरचिता सर्वार्थसिध्यभिधा वृत्तिरतीव समीचीना सर्वत्र श्रद्धालुश्रावकजन-स्वाध्यायविषयत्वात्सुप्रसिद्धतरा चेति सैवास्माभिर्यथामति संशोध्य विद्यार्थिवृन्दोपयोगार्थं " दशाध्यायपरिच्छिन्ने तत्त्वार्थे पठिते सति। फलं स्यादुपवासस्य भाषितं मुनिपुङ्गवैः " इति फलाभिधायकवाक्यानुमितविधेः प्रतिदिनमवश्यपठनीयत्वात् सधर्मश्राद्धजनस्वाध्यायार्थं च मुद्रिता ॥ अयं सर्वार्थसिद्धिवृत्तिकृत् भगवान् पूज्यपादाचार्योऽपि उपर्युक्तनन्दिगणस्थ एव। अस्यापि प्रथमं देवनन्दीति नामासीत्। पश्चादधिगतसकलशास्त्रार्थतत्त्वस्यास्यैव जिनेन्द्रबुद्धिरिति द्वितीयं नाम प्रसिद्ध बभूव। तथा, एतस्य तपोमहिम्ना एतत्पादोदकं सुवर्णत्वेन परिणतं बहुशो दृष्ट्वा तदानीन्तनैः ' पूज्यपाद ' इत्यपरं नामाकारीति क्वचिद्ग्रन्थे दृष्टमस्माभिः ॥ अस्यान्वयविषये अग्रेतना श्लोका उपलभ्यन्ते

श्रीगृद्धपिच्छमुनिपस्य बलाकपिच्छः। शिष्योऽजनिष्ट भुवनत्रयवर्तिकीर्त्तिः ॥ चारित्रचञ्चुरखिलावनिपालमौलि-। माला-शिलीमुखविराजितपादपद्मः ॥ १ ॥ एवं महाचार्यपरम्परायां। स्यात्कारमुद्राङ्किततत्त्वदीपः ॥ भद्रः समन्ताद्गुणतो गणीशः। समन्तभद्रोऽजनि वादिसिंह ॥ २ ॥ ततः ॥ यो देवनन्दिप्रथमाभिधानो। बुद्ध्या महत्या स जिनेन्द्रबुद्धिः ॥ श्रीपूज्यपादोऽ

जनि ,देवताभिर्यत्पूजितं पादयुगं यदीयम् ॥ ३ ॥ जैनेन्द्रं निज-शब्दभागमतुलं सर्वार्थसिद्धिः परा । सिद्धान्ते निपुणत्वमुद्धकविता जैनाभिषेकः स्वकः ॥ छन्दः सूक्ष्मधिय समाधिशतकं स्वास्थ्य यदीय विदा- । माख्यातीह स पूज्यपादमुनिपः पूज्यो मुनीना गणै. ॥ ४ ॥

अत्र चरमश्लोके भगवत्पूज्यपादप्रणीता ये ग्रन्थाः संगृहीतास्तेषु जैनाभिषेकाख्यो ग्रन्थ इदानीं यावन्नास्माभिः क्वचित्प्राप्तः । यदि स ग्रन्थ सुप्रारब्धवशात्क्वचिल्लभ्येत तर्हि आधुनिकाना पञ्चामृताभिषेकवादनिर्णयः सुकर इति मन्यामहे, भगवत्पूज्यपादवचनस्य महीयस्त्वात् ॥ तथा चिकित्साशास्त्रेऽपि श्रीमत्पूज्यपादप्रणीतौ द्वौ ग्रन्थौ उपलभ्येते । तयोरेकस्मिन् चिकित्सा तथाऽन्यस्मिन्नौषधीना धान्याना च गुणनिरूपणं दृश्यते । तेन भगवतश्चिकित्साशास्त्रेऽपि नैपुण्यं विशदं भवति ॥

सर्वार्थसिद्धिग्रन्थारम्भे ' मोक्षमार्गस्य नेतारमिति ' श्लोको वर्तते स तु सूत्रकृता भगवदुमास्वातिनैव विरचित इति श्रुतसागराचार्यस्याभिमतमिति तत्प्रणीतश्रुतसागराख्यवृत्ति· स्पष्टमवगम्यते । तथापि श्रीमत्पूज्यपादाचार्येणाव्याख्यातत्वादिदं श्लोकनिर्माणं न सूत्रकृत· किंतु सर्वार्थसिद्धिकृत एवेति निर्विवादम् । तथा एतेषां सूत्राणां द्वैपायकप्रश्नोपर्युत्तरत्वेन विरचनं तैरेवाङ्गीक्रियते तथा च उत्तरे वक्तव्ये मध्ये मङ्गलस्याप्रस्तुतत्वाद्वस्तुनिर्देशस्यापि मङ्गलत्वेनाङ्गीकृतत्वाच्चोपरितनः सिद्धान्त एव दार्ढ्यमाप्नोतीत्यूह्यं सुधीभिः ॥ अस्मिन् दशाध्यायपरिच्छिन्ने तत्त्वार्थसूत्रग्रन्थे भगवता सप्ततत्त्वनिरूपणं सप्रपञ्चं व्यधायि । तत्र प्रथमाध्यायमारभ्य आचतुर्थाध्यायं जीवतत्त्वं, पञ्चमाध्याये

पुद्गलतत्त्वं, षष्ठसप्तमयोरास्रवतत्त्वं, अष्टमे बन्धतत्त्व, नवमे संवरनिर्जरातत्त्वे, दशमे मोक्षतत्त्वमिति सप्ततत्त्वानि ऊहापोहाभ्या निरूपितानि ॥

एतद्ग्रन्थमुद्रणसमये श्रेष्ठिवरैः मुम्बापुरवासिभिः श्रीमद्भिः हीराचन्दात्मजैर्माणिकचन्देतिसुगृहीतनामधेयैरस्मत्साहाय्यार्थमेकं देवनागराक्षरैर्लिखितं प्राचीनं पुस्तकं प्रेषितं, तत्तु प्रायोऽशुद्धं, तथा अस्मत्सुहृच्चूडामणिभूतैः श्वेतसरोवरा— ( श्रवणबेळगुळ )— लङ्कारहीरवरैर्दोर्बलिजिनदासशास्त्रिभिरेकं कार्णाटलिप्यलंकृतं सुबोधटिप्पणिसंवलितं तालपत्रपुस्तक प्राचीन प्रेषितं तत्प्रायःशुद्धं, इत्युभयोरप्युक्तपर्ति न कदापि विस्मरिष्यामः ॥

तथाऽस्मास्वतिप्रणयिभिर्विपन्नजनानुकम्पाप्रवणैर्महापरोपकारिभिरकारणसुहृद्भिः अकलूजग्रामवासिभिर्गांधीकुलावतंसनाथात्मजरामचन्द्रशर्मश्रेष्ठिवरैः वारंवारं प्रथमसंस्करणसमये मुद्रणकार्यविज्ञापनयनेन यदुपकृतं तद्विषये कार्तज्ञ्यं कथमाविष्कर्तव्यमित्येव न जानीमः ॥

उपर्युध्दृतमाचार्यवृत्त किञ्चिदिव लभ्यते । यदि च कैश्चित् तद्वृत्तं सकलमस्मत्सकाशे प्रदीयते तदा तदुपकारान् स्मृत्वा सर्वं तन्मुद्रयिष्यामः । अस्मिन् ग्रन्थमुद्रणे क्वचित्स्खलनं दृश्येत चेत्तत् ' गच्छतः स्खलनं न दोषायेति, न्यायमनुस्मृत्य क्षन्तव्य सधर्मभिः कृपालुभिरिति सप्रणामं वारंवारं सम्प्रार्थ्य विरम्यत इति शम्—

शकाब्दा १८२९ } यौष्माकीण
वैशाख शुक्ला १५ } निटवेकुलोत्पन्नो ब्रह्मसूनु कलापशर्मा

# तत्त्वार्थसूत्राणामनुक्रमः



## प्रथमोऽध्यायः

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे प्रथमोऽध्यायः

---

## अथ द्वितीयोऽध्यायः

---

## अथ तृतीयोऽध्यायः

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे तृतीयोऽध्यायः

---

## अथ चतुर्थोऽध्यायः

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे चतुर्थोऽध्यायः

---

## अथ पञ्चमोऽध्यायः

---

## अथ षष्ठोऽध्यायः

सूत्राणि पृष्ठं

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे सप्तमोऽध्यायः

---

## अथ अष्टमोऽध्यायः

---

## अथ नवमोऽध्यायः

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे नवमोऽध्यायः

---

## अथ दशमोऽध्यायः



इति तत्त्वार्थाधिगमे मोक्षशास्त्रे दशमोऽध्यायः

---

ॐ नमः परमात्मने वीतरागाय

# अथ श्रीपूज्यपादापरनामदेवनन्द्याचार्यविरचिता

# तत्त्वार्थवृत्तिः सर्वार्थसिद्धिः

## ॥ प्रथमोऽध्यायः ॥

मोक्षमार्गस्य नेतारं ।
भेत्तारं कर्मभूभृताम् ॥
ज्ञातारं विश्वतत्त्वानां ।
वन्दे तद्गुणलब्धये ॥ १ ॥

कश्चिद्भव्यः प्रत्यासन्ननिष्ठः प्रज्ञावान् स्वहितमुपलिप्सुर्विविक्ते परमरम्ये भव्यसत्त्वविश्रामास्पदे क्वचिदाश्रमपदे मुनिपरिषण्मध्ये सन्निषण्णं मूर्तमिव मोक्षमार्गमवाग्विसर्गं वपुषा निरूपयन्तं युक्त्यागमकुशलं परहितप्रतिपादनैककार्यमार्यनिषेव्यं निर्ग्रन्थाचार्यवर्यमुपसद्य सविनयं परिपृच्छति स्म । भगवन्, किं नु खलु आत्मने हितं स्यादिति ॥ स आह मोक्ष इति । स एव पुनः प्रत्याह— किं स्वरूपोऽसौ मोक्षः कश्चास्य प्राप्त्युपाय इति ॥ आचार्य आह—निरवशेषनिराकृतकर्ममलकलङ्कस्याशरीरस्यात्मनोऽचिन्त्यस्वाभाविकज्ञानादिगुणमव्याबाधसुखमात्यन्तिकमवस्थान्तरं मोक्ष इति ॥ तस्यात्यन्तपरोक्षत्वाच्छद्मस्थाः प्रवादिनस्तीर्थकरंमन्यास्तस्य स्वरूपमस्पृशन्तीभिर्वाग्भिर्युक्त्याभासनिबन्धनाभिरन्यथा परिकल्पयन्ति 'चैतन्यं पुरुषस्य स्वरूपं, तच्च ज्ञेयाकारपरिच्छेदपराङ्मुखमिति' तत्सदप्यसदेव, निराकारत्वात् खरविषाणवत् ॥ बुद्ध्यादिवैशेषिकगुणो-

---

१ सांख्याः । २ बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराः । एषामत्यन्तक्षये मोक्षमाहुः वैशेषिकाः ।

च्छेद पुरुषस्य मोक्ष इति च । तदपि परिकल्पनममदेव विशेषलक्षणशून्यस्यावस्तुत्वात्[1] ॥ प्रदीपनिर्वाणकल्पमात्मनिर्वाणमिति च । तस्य खरविषाणवत्कल्पना तैरेवाहत्य निरूपिता । इत्येवमादि ॥ तस्य स्वरूपमनवद्यमुत्तरत्र वक्ष्याम ॥ तत्प्राप्त्युपाय प्रत्यपि ते विसवदन्ते– 'ज्ञानादेव चारित्रनिरपेक्षात्तत्प्राप्ति, श्रद्धानमात्रादेव वा ज्ञाननिरपेक्षाच्चारित्रमात्रादेवेति' च । व्याध्यभिभूतस्य तद्विनिवृत्त्युपायभूतभेषजविषयव्यस्तज्ञानादिसाधनत्वाभाववत् ॥ एव व्यस्त ज्ञानादि मोक्षप्राप्त्युपायो न भवति । किं तर्हि[2] तत्त्रितय समुदितमित्याह—

## सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः ॥ १ ॥

सम्यगित्यव्युत्पन्न शब्दो व्युत्पन्नो वा । अञ्चते[3] क्वौ समञ्चतीति सम्यगिति । अस्यार्थः प्रशसा । स प्रत्येक परिसमाप्यते । सम्यग्दर्शन सम्यग्ज्ञान सम्यक्चारित्रमिति । एतेषा स्वरूप लक्षणतो विधानतश्च पुरस्ताद्विस्तरेण निर्देक्ष्याम ॥ उद्देशमात्र त्विदमुच्यते । पदार्थाना याथात्म्यप्रतिपत्तिविषयश्रद्धानसग्रहार्थं दर्शनस्य सम्यग्विशेषणम् । येन येन प्रकारेण जीवादय[4] पदार्था व्यवस्थितास्तेन तेनावगम[5] सम्यग्ज्ञानम् । अनध्यवसायसशयविपर्ययनिवृत्त्यर्थं सम्यग्विशेषणम् । ससारकारणनिवृत्ति प्रत्यागूर्णस्य[6] ज्ञानवत कर्मादाननिमित्तक्रियोपरम[7] सम्यक्चारित्रम् । अज्ञानपूर्वकाचरणनिवृत्त्यर्थं सम्यग्विशेषणम् ॥ स्वय पश्यति

---

१ बुद्ध्यादय एव जीवस्य विशेपलक्षणानि । तदभावे लक्ष्यस्य सुतराम भावसिद्धे । २ वद्धा । ३ गत्यन्तराभावात । ४ अन्ते । ५ सम्यग्दर्शनस्य त्वनन्तरमेव । ज्ञानस्यापि प्रथमाध्याये एव नवमसूत्रात् प्रभृति । चारित्रस्य च सप्तमनवमाध्याययोर्मध्ये । ६ एते त्रयो मिथ्याज्ञानरूपा यत । तत एव च मोक्षसाधने नोपयुज्यन्ते । ७ उद्यतस्य । ८ कर्तृसाधनमेतत् ।

दृश्यतेऽनेनेति दृष्टिमात्रं वा दर्शनम् ॥ जानाति ज्ञायतेऽनेन ज्ञप्तिमात्रं वा ज्ञानम् ॥ चरति चर्यतेऽनेन चरणमात्रं वा चारित्रम् ॥ नन्वेवं स एव कर्ता स एव करणमित्यायातम्। तच्च विरुद्धम्। सत्यं, स्वपरिणामपरिणामिनोर्भेदविवक्षायां तथाऽभिधानात्। यथाऽग्निर्दहतीन्धनं दाहपरिणामेन ॥ उक्तः कर्त्रादिभिः साधनभावः पर्यायपर्यायिणोरेकत्वानेकत्वं प्रत्यनेकान्तोपपत्तौ स्वातन्त्र्यपारतन्त्र्यविवक्षोपपत्तेरेकस्मिन्नप्यर्थे न विरुध्यते। अग्नौ दहनादिक्रियायाः कर्त्रादिसाधनभाववत् ॥ ज्ञानग्रहणमादौ न्याय्यं, दर्शनस्य तत्पूर्वकत्वात् अल्पाच्तरत्वाच्च ॥ नैतद्युक्तं, युगपदुत्पत्तेः ॥ यदाऽस्य दर्शनमोहस्योपशमात्क्षयात्क्षयोपशमाद्वा आत्मा सम्यग्दर्शनपर्यायेणाविर्भवति, तदैव तस्य मत्यज्ञानश्रुताज्ञाननिवृत्तिपूर्वकं मतिज्ञानं श्रुतज्ञानं चाविर्भवति। घनपटलविगमे सवितुः प्रतापप्रकाशाभिव्यक्तिवत् ॥ अल्पाच्तरादभ्यर्हितं पूर्वं निपतति। कथमभ्यर्हितत्वं ज्ञानस्य? सम्यग्व्यपदेशहेतुत्वात् ॥ चारित्रात्पूर्वं ज्ञानं प्रयुक्तं, तत्पूर्वकत्वाच्चारित्रस्य ॥ सर्वकर्मविप्रमोक्षो मोक्षः तत्प्राप्त्युपायो मार्गः। मार्ग इति चैकवचननिर्देशः समस्तस्य मार्गभावज्ञापनार्थः। तेन व्यस्तस्य मार्गत्वनिवृत्तिः कृता भवति। अतः सम्यग्दर्शनं सम्यग्ज्ञानं सम्यक्चारित्रमित्येतत्त्रितयं समुदितं मोक्षस्य साक्षान्मार्गो वेदितव्यः ॥

---

१ करणे। २ भावे। ३ अभेदवतोऽपि भेदेन कथनात्। ४ साधनं भावः साधनता। ५ तदा मत्यज्ञानश्रुताज्ञानयोरभावो भवति सम्यक्च ते उत्पद्येते इति नास्ति भावः। तर्हि? ते एव मिथ्यामतिश्रुते सम्यक्त्वेन विपरिणमेते इति। ज्ञानस्य प्रादुर्भावस्तु सदा ज्ञानावरणक्षयोपशमकारणक एव। अत एव 'श्रुतं मतिपूर्व'मित्यत्र वक्ष्यते यत् सम्यक्त्वस्य तदपेक्षत्वादिति। ६ दर्शनस्य तत्पूर्वकत्वादिति प्रथमहेतुं निरस्य द्वितीयहेतुं दूषयन्ति। ७ इति क्रमस्य सिद्धिः।

तत्रादावुद्दिष्टस्य सम्यग्दर्शनस्य लक्षणनिर्देशार्थमिदमुच्यते—

## ॥ तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् ॥ २

तत्त्वशब्दो भावसामान्यवाची । कथम् ? तदिति सर्वनामपदम् । सर्वनाम च सामान्ये वर्तते । तस्य भावस्तत्त्वम् ॥ तस्य कस्य ? योऽर्थो यथावस्थितस्तथा तस्य भवनमित्यर्थः ॥ अर्यत इत्यर्थो निश्चीयत इत्यर्थः । तत्त्वेनार्थस्तत्त्वार्थः ॥ अथवा भावेन भाववतोऽभिधानं तदव्यतिरेकात् । तत्त्वमेवार्थस्तत्त्वार्थः । तत्त्वार्थस्य श्रद्धानं तत्त्वार्थश्रद्धानं सम्यग्दर्शनं प्रत्येतव्यम् । तत्त्वार्थश्च वक्ष्यमाणो जीवादिः ॥ दृशेरालोकार्थत्वात् श्रद्धानार्थगतिर्नोपपद्यते ? । धातूनामनेकार्थत्वाददोषः । प्रसिद्धार्थत्यागः कुत इति चेन्मोक्षमार्गप्रकरणात् ॥ तत्त्वार्थश्रद्धानं ह्यात्मपरिणामो मोक्षस्य साधनं युज्यते भव्यजीवविषयत्वात् ॥ आलोकस्तु चक्षुरादिनिमित्तः सर्वसंसारिजीवसाधारणत्वान्न मोक्षमार्गो युक्तः ॥ अर्थश्रद्धानमिति चेत्सर्वार्थग्रहणप्रसङ्गः । तत्त्वश्रद्धानमिति चेद्भावमात्रप्रसङ्गः । सत्ताद्रव्यत्वगुणत्वकर्मत्वादि तत्त्वमिति कैश्चित्कल्प्यत इति ॥ तत्त्वमेकत्वमिति वा सर्वैक्यग्रहणप्रसङ्गः । पुरुष एवेदं सर्वमित्यादि कैश्चित्कल्प्यत इति । तस्मादव्यभिचारार्थमुभयोरुपादानम् ॥ तत् द्विविधं सरागवीतरागविषयभेदात् ॥ प्रशमसंवेगानुकम्पास्तिक्याद्यभिव्यक्तिलक्षणं प्रथमम् । आत्मविशुद्धिमात्रमितरत् ॥

---

१ सर्वेषां नाम ( भवितुमर्हति ) सर्वनाम इत्यन्वर्थसंज्ञाकरणात् । २ इति 'तत्त्व' शब्दस्य सिद्धिः । ३ इति 'अर्थ' शब्दस्य वाच्यार्थो भवति । ४ अत्र नन्वित्याशङ्कार्थकः शब्दोऽध्याहार्यः । ५ वैशेषिकैः । ६ कैश्चिदिति पूर्वस्य संबन्धः । ते च वैयासा वेदान्तिनः ७ पूर्वोक्तस्यैव स्पष्टीकरणम् । ८ इति पूर्वविवरणस्य स्पष्टीकरणम् ।

अथैतत्सम्यग्दर्शनं जीवादिपदार्थविषय कथमुत्पद्यत इत्यत आह—

॥ तन्निसर्गादधिगमाद्वा ॥ ३ ॥

निसर्ग स्वभाव इत्यर्थ । अधिगमोऽर्थावबोध । तयोर्हेतुत्वेन निर्देश ॥ कस्या ? क्रियाया । का च क्रिया । उत्पद्यत इत्यध्याह्रियते, सोपस्कारत्वात् सूत्राणाम् ॥ तदेतत्सम्यग्दर्शन निसर्गादधिगमाद्वोत्पद्यत इति ॥ अत्राह— निसर्गज सम्यग्दर्शनेऽर्थाधिगम स्याद्वा न वा ? यद्यस्ति, तदपि अधिगमजमेव, नार्थान्तरम् । अथ नास्ति कथमनवबुद्धतत्त्वस्यार्थश्रद्धानमिति ? नैष दोष । उभयत्र सम्यग्दर्शने अन्तरङ्गो हेतुस्तुल्यो दर्शनमोहस्योपशम क्षय क्षयोपशमो वा । तस्मिन्सति यद्बाह्योपदेशादृते प्रादुर्भवति तन्नैसर्गिकम् । यत्परोपदेशपूर्वक जीवाद्यधिगमनिमित्त स्यात् तदुत्तरम् । इत्यनयोरय भेद ॥ तद्ग्रहण किमर्थम् ? अनन्तरनिर्देशार्थम् । अनन्तर सम्यग्दर्शन तदित्यनेन प्रतिनिर्दिश्यते । इतरथा मोक्षमार्गोऽपि प्रकृतस्तस्याभिसम्बन्ध स्यात् ॥ ननु च ' अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा— ' इत्यनन्तरस्य सम्यग्दर्शनस्य ग्रहण सिद्धमिति चेन्न ' प्रत्यासत्ते प्रधान बलीय ' इति मोक्षमार्ग एव सम्बध्येत । तस्मात्तद्वचन क्रियते ॥

तत्त्वार्थश्रद्धान सम्यग्दर्शनमित्युक्तम् । अथ कि तत्त्वमित्यत इदमाह—

॥ जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वम् ॥४॥

तत्र चेतनालक्षणो जीव । स च ज्ञानादिभेदादनेकधा भिद्यते । तद्विपर्ययलक्षणोऽजीव । शुभाशुभकर्मागमद्वाररूप आस्रव । आत्मकर्मणोरन्योऽन्यप्रदेशानुप्रवेशात्मको बन्ध ।

आस्रवनिरोधलक्षणः संवरः । एकदेशकर्मसंक्षयलक्षणा निर्जरा । कृत्स्नकर्मविप्रयोगलक्षणो मोक्षः ॥ एषां प्रपञ्च उत्तरत्र वक्ष्यते ॥ सर्वस्य फलस्यात्माधीनत्वादादौ जीवग्रहणम् । तदुपकारार्थत्वात्तदनन्तरमजीवाभिधानम् । तदुभयविषयत्वात्तदनन्तरमास्रवग्रहणम् । तत्पूर्वकत्वात्तदनन्तरं बन्धाभिधानम् । संवृतस्य बन्धाभावात्तत्प्रत्यनीकप्रतिपत्त्यर्थं तदनन्तरं संवरवचनम् । संवरे सति निर्जरोपपत्तेस्तदन्तिके निर्जरावचनम् । अन्ते प्राप्यत्वान्मोक्षस्यान्ते वचनम् ॥ इह पुण्यपापग्रहणं च कर्तव्यं, नव पदार्था इत्यन्यैरप्युक्तत्वात् ॥ न कर्तव्यम्, तयोरास्रवे बन्धे चान्तर्भावात् ॥ यद्येवमास्रवादिग्रहणमनर्थकं जीवाजीवयोरन्तर्भावात् ॥ नानर्थकम् । इह मोक्षः प्रकृतः । सोऽवश्यं निर्देष्टव्यः । स च संसारपूर्वकः । संसारस्य प्रधानहेतुरास्रवो बन्धश्च । मोक्षस्य प्रधानहेतुः संवरो निर्जरा च । अतः प्रधानहेतुहेतुमत्फलनिदर्शनार्थत्वात्पृथगुपदेशः कृतः ॥ दृश्यते हि सामान्येऽन्तर्भूतस्यापि विशेषस्य पृथगुपादानं प्रयोजनार्थम् । क्षत्रिया आयाताः सूरवर्मापीति ॥ तत्त्वशब्दो भाववाचीत्युक्तः । स कथं जीवादिभिर्द्रव्यवचनैः सामानाधिकरण्यं प्रतिपद्यते?[२] अव्यतिरेकात्तद्भावाध्यारोपाच्च सामानाधिकरण्यं भवति । यथा उपयोग एवात्मेति ॥ यद्येवं तत्तल्लिङ्गसंख्यानुवृत्तिः प्राप्नोति । विशेषणविशेष्यसम्बन्धे सत्यपि शब्दशक्तिव्यपेक्षया उपात्तलिङ्गसंख्याव्यतिक्रमो न भवति ॥ अयं क्रम आदिसूत्रेऽपि योज्यः ॥

---

१ क्रमेण आद्यचतुर्ष्वध्यायेषु जीवसंबन्धः, पञ्चमेऽजीवः, षष्ठसप्तमयोरास्रवः, अष्टमे बन्धो नवमे संवरो निर्जरा च दशमेऽध्याये मोक्ष इति क्रमतत्त्वं वर्णितमास्ते । २ कुन्दकुन्दाद्यैः ।

एवमेषामुद्दिष्टानां सम्यग्दर्शनादीनां जीवादीनां च संव्यवहारविशेषव्यभिचारनिवृत्त्यर्थमाह—

**॥ नामस्थापनाद्रव्यभावतस्तन्न्यासः ॥ ५ ॥**

अतद्गुणे वस्तुनि संव्यवहारार्थं पुरुषाकारान्[1] नियुज्यमानं संज्ञाकर्म नाम। काष्ठपुस्तचित्रकर्माक्षनिक्षेपादिषु सोऽयमिति स्थाप्यमाना स्थापना। गुणैर्द्रोष्यते गुणान्द्रोष्यतीति वा द्रव्यम्[2]। वर्तमानतत्पर्यायोपलक्षितं द्रव्यं भावः ॥ तद्यथा— नामजीवः स्थापनाजीवो द्रव्यजीवो भावजीव इति चतुर्धा जीवशब्दार्थो न्यस्यते ॥ जीवनगुणमनपेक्ष्य यस्य कस्यचिन्नाम क्रियमाणं नामजीवः ॥ अक्षनिक्षेपादिषु जीव इति वा मनुष्यजीव इति वा व्यवस्थाप्यमानः स्थापनाजीवः ॥ द्रव्यजीवो द्विविधः। आगमद्रव्यजीवो नोआगमद्रव्यजीवश्चेति ॥ तत्र जीवप्राभृतज्ञायी मनुष्यजीवप्राभृतज्ञायी वा अनुपयुक्त आत्मा आगमद्रव्यजीवः ॥ नोआगमद्रव्यजीवस्त्रेधा व्यवतिष्ठते। ज्ञायकशरीर—भावि—तद्व्यतिरिक्तभेदात्। तत्र ज्ञातुर्यच्छरीरं त्रिकालगोचरं तज्ज्ञायकशरीरम्। सामान्यापेक्षया नोआगमभाविजीवो नास्ति जीवनसामान्यस्य सदाऽपि विद्यमानत्वात्। विशेषापेक्षया त्वस्ति गत्यन्तरे। जीवो व्यवस्थितो मनुष्यभवप्राप्तिं प्रत्यभिमुखो मनुष्यभाविजीवः ॥ तद्व्यतिरिक्तः कर्मनोकर्म[3]विकल्पः ॥ भावजीवो द्विविधः। आगमभावजीवो नोआगमभावजीवश्चेति। तत्र जीवप्राभृतविषयोपयोगाविष्टो मनुष्यजीवप्राभृतविषयोपयोगयुक्तो वा आत्मा आगमभावजीवः। जीवनपर्यायेण मनुष्यजीवत्व-

---

१ हठात्॥ २ गुणैर्गुणान्वा द्रुतं गतं प्राप्तमिति द्रव्यमित्यप्यधिकः पाठः पुस्तकान्तरे दृश्यते ॥ ३ औदारिकवैक्रियिकाहारकशरीरत्रयस्य षट्पर्याप्तीनां च योग्यपुद्गलानामादानं नोकर्म ॥

पर्यायेण वा समाविष्ट आत्मा नोआगमभावजीव ॥ एवमितरेषामपि पदार्थानामजीवादीना नामादिनिक्षेपविधिर्नियोज्य । स किमर्थ ? अप्रकृतनिराकरणाय प्रकृतनिरूपणाय च । निक्षेपविधिना नामशब्दार्थ प्रस्तीर्यते ॥ तच्छब्दग्रहण किमर्थम् ? सर्वसङ्ग्रहार्थम् । असति हि तच्छब्दे सम्यग्दर्शनादीना प्रधानानामेव न्यासेनाभिसम्बन्ध स्यात तद्विषयभावेनोपगृहीतानामप्रधानाना जीवादीना न स्यात् । तच्छब्दग्रहणे पुन क्रियमाणे सति सामर्थ्यात्प्रधानानामप्रधानाना च ग्रहण सिद्ध भवति ॥

एव नामादिभि प्रस्तीर्णानामधिकृताना तत्त्वाधिगम. कुत ? इत्यत इदमुच्यते -

## ॥ प्रमाणनयैरधिगमः ॥ ६ ॥

नामादिनिक्षेपविधिनोपक्षिप्ताना जीवादीना तत्त्व प्रमाणेभ्यो नयैश्चाधिगम्यते ॥ प्रमाणनया वक्ष्यमाणलक्षणविकल्पा । तत्र प्रमाण द्विविध स्वार्थ परार्थ च । तत्र स्वार्थ प्रमाण श्रुतवर्ज्यम् । श्रुत पुन स्वार्थ भवति परार्थ च ॥ ज्ञानात्मक स्वार्थ वचनात्मक परार्थम् ॥ तद्विकल्पा नया ॥ अत्राह— नयशब्दस्य अल्पाच्तरत्वात्पूर्वनिपात प्राप्नोति ? नैष दोष । अभ्यर्हितत्वात्प्रमाणस्य तत्पूर्वनिपात । अभ्यर्हितत्व च सर्वतो बलीय । कुतोऽभ्यर्हितत्वम् ? नयप्ररूपणप्रभवयोनित्वात् ॥ एव ह्युक्त. प्रगृह्य - प्रमाणत.- परिणतिविशेषादर्थावधारण - नय इति । सकलविषयत्वाच्च प्रमाणस्य ॥ तथा चोक्त । " सकलादेश प्रमाणाधीनो विकलादेशो नयाधीन इति " ॥ नयो द्विविध । द्रव्यार्थिक पर्यायार्थिकश्च । पर्यायार्थिकनयेन पर्यायतत्त्वमधिगन्तव्यम् । इतरेषा नामस्थापनाद्रव्याणा द्रव्यार्थि-

कनयेन, सामान्यात्मकत्वात् ॥ द्रव्यमर्थः प्रयोजनमस्येत्यसौ द्रव्यार्थिकः । पर्यायोऽर्थः प्रयोजनमस्येत्यसौ पर्यायार्थिक· ॥ तत्सर्वं समुदितं प्रमाणेनाधिगन्तव्यम् ॥

एवं प्रमाणनयैरधिगताना जीवादीना पुनरप्यधिगमोपायान्तरप्रदर्शनार्थमाह—

॥निर्देशस्वामित्वसाधनाधिकरणस्थितिविधानतः॥७॥

निर्देशः स्वरूपाभिधानम् । स्वामित्वमाधिपत्यम् । साधनमुत्पत्तिनिमित्तम् । अधिकरणमधिष्ठानम् । स्थितिः कालपरिच्छेदः । विधान प्रकार· ॥ [ १ ] तत्र सम्यग्दर्शनं किमिति प्रश्ने तत्त्वार्थश्रद्धानमिति निर्देशो नामादिर्वा ॥ [ २ ] सम्यग्दर्शन कस्येत्युक्ते, सामान्येन जीवस्य ॥ विशेषेण— गत्यनुवादेन नरकगतौ सर्वासु पृथिवीषु नारकाणा पर्याप्तकानामौपशमिक क्षायोपशमिक चास्ति । प्रथमाया पृथिव्या पर्याप्तापर्याप्तकाना क्षायिक क्षायोपशमिक चास्ति ॥ तिर्यग्गतौ तिरश्चां पर्याप्तकानामौपशमिकमस्ति । क्षायिकं क्षायोपशमिकं

---

१ नामस्थापनाद्रव्यभावा वा निर्देश उच्यते इत्यर्थः ॥ २ सामान्येन सम्यग्दर्शनस्य स्वामी जीवो भवतीति स्वामित्वमुच्यते । ३ विशेषेण तु चतुर्दशमार्गणानुवादेन स्वामित्वमुच्यते ॥ ४ अत्र श्लोका ॥ प्रथमाया त्रितयं स्यात्पर्याप्ताना द्वय नादितरेषाम । अशमजमितरास्वपि वा क्षयज पर्याप्तकाना तु ॥ १ ॥ पर्याप्ताना त्रितयं द्वयं तिरश्चाम शान्तमितरेषाम् । क्षायिकवर्ज्यं द्वितयं पर्याप्तस्यैव तत्स्त्रीषु ॥ २ ॥ नृणा पर्याप्ताना त्रयमितरेषा द्वय तु शमवर्ज्यम । त्रयमपि नारीषु स्यात्पर्याप्तास्वेव नान्यासु ॥ ३ ॥ पर्याप्तापर्याप्तकदेवेषु त्रितयमस्ति सम्यक्त्वम् । देवेष्वकल्पजेषु पर्याप्तेष्वक्षयजमेव ॥ ४ ॥ क्षायिकम·वरतदाष्टप्रभृतिषु सम्भवाति वेदकं तु पुन । अस्त्य रम·दकान्तेष्वौपशम चोपशान्तान्तम ॥ ५ ॥ इत्यप्यधिकः पाठ पुस्तकान्तरे विद्यते ॥

च पर्याप्तापर्याप्तकानामस्ति ॥ तिरश्चीनां क्षायिकं नास्ति । कुत इत्युक्ते मनुष्यः कर्मभूमिज एव दर्शनमोहक्षपणप्रारम्भको भवति । क्षपणप्रारम्भकालात्पूर्वं तिर्यक्षु बद्धायुष्कोऽपि उत्कृष्टभोगभूमितिर्यक्पुरुषेष्वेवोत्पद्यते । न तिर्यक्स्त्रीषु । द्रव्यवेदस्त्रीणां तासां क्षायिकासम्भवात् ॥ एवं तिरश्चामप्यपर्याप्तकानां क्षायोपशमिकं ज्ञेयम् । न पर्याप्तकानाम् ॥ औपशमिकं क्षायोपशमिकं च पर्याप्तिकानामेव नापर्याप्तिकानाम् ॥ मनुष्यगतौ मनुष्याणां पर्याप्तापर्याप्तकानां क्षायिकं क्षायोपशमिकं चास्ति । औपशमिकं पर्याप्तकानामेव नापर्याप्तकानाम् ॥ मानुषीणां त्रितयमप्यस्ति पर्याप्तिकानामेव नापर्याप्तिकानाम् । क्षायिकं पुनर्भाववेदेनैव ॥ देवगतौ सामान्येन देवानां पर्याप्तापर्याप्तकानां त्रितयमप्यस्ति । औपशमिकमपर्याप्तकानां कथमिति चेच्चारित्रमोहोपशमेन सह मृतान्प्रति ॥ विशेषेण भवनवासिव्यन्तरज्योतिष्काणां देवानां देवीनां च सौधर्मैशानकल्पवासिनीनां च क्षायिकं नास्ति । तेषां पर्याप्तकानामौपशमिकं क्षायोपशमिकं चास्ति ॥ १ ॥ इन्द्रियानुवादेन पञ्चेन्द्रियाणां संज्ञिनां त्रितयमप्यस्ति, नेतरेषाम्॥२॥ कायानुवादेन त्रसकायिकानां त्रितयमप्यस्ति, नेतरेषाम् ॥ ३ ॥ योगानुवादेन त्रयाणां योगिनां त्रितयमप्यस्ति । अयोगिनां क्षायिकमेव ॥ ४ ॥ वेदानुवादेन त्रिवेदानां त्रितयमप्यास्ति । अपगतवेदानामौपशमिकं क्षायिकं चास्ति ॥ ५ ॥ कषायानुवादेन चतुष्कषायाणां त्रितयमप्यस्ति । अकषायाणामौपशमिकं क्षायिकं चास्ति ॥ ६ ॥ ज्ञानानुवादेन आभिनिबोधिकश्रुतावधिमनःपर्ययज्ञानिनां त्रितयमप्यस्ति । केवलज्ञानिनां क्षायिकमेव ॥ ७ ॥ संयमानुवादेन सामायिकच्छेदोपस्थापनसंयतानां त्रितयमप्यास्ति । परिहारविशुद्धिसंयतानामौपशमिकं नास्ति । इतरत् द्वितयमप्यस्ति ।

सूक्ष्मसाम्परायथाख्यातसंयतानामौपशमिक क्षायिक चास्ति । सयतासंयतानां च त्रितयमप्यस्ति ॥ ८ ॥ दर्शनानुवादेन चक्षुर्दर्शनाचक्षुर्दर्शनावधिदर्शनिनां त्रितयमप्यस्ति । केवलदर्शनिनां क्षायिकमेव ॥ ९ ॥ लेश्यानुवादेन षड्लेश्याना त्रितयमप्यस्ति । अलेश्याना क्षायिकमेव ॥ १० ॥ भव्यानुवादेन भव्याना त्रितयमप्यस्ति, नाभव्यानाम् ॥ ११ ॥ सम्यक्त्वानुवादेन यत्र यत्सम्यग्दर्शन तत्र तदेव ज्ञेयम् ॥ १२ ॥ संज्ञानुवादेन सज्ञिनां त्रितयमप्यस्ति । नासज्ञिनाम् । तदुभयव्यपदेशरहिताना क्षायिकमेव ॥ १३ ॥ आहारानुवादेन आहारकाणा त्रितयमप्यस्ति । अनाहारकाणां छद्मस्थाना त्रितयमप्यस्ति ॥ केवलिना समुद्घातगताना क्षायिकमेव ॥ १४ ॥ [ ३ ] साधन द्विविधम्—आभ्यन्तरं वाह्य च ॥ आभ्यन्तर दर्शनमोहस्योपशम. क्षयः क्षयोपशमो वा । वाह्य नारकाणां प्राक्चतुर्थ्याः सम्यग्दर्शनस्य साधन केषाञ्चिज्जातिस्मरण केषाञ्चिद्धर्मश्रवण केषाञ्चिद्वेदनाभिभव. ॥ चतुर्थीमारभ्य आ सप्तम्या नारकाणा जातिस्मरण वेदनाभिभवश्च ॥ तिरश्चा केषाञ्चिज्जातिस्मरण केषाञ्चिद्धर्मश्रवण केषाञ्चिज्जिनबिम्बदर्शनम् ॥ मनुष्याणामपि तथैव ॥ देवाना केषाञ्चिज्जातिस्मरण केषाञ्चिद्धर्मश्रवण केषाञ्चिज्जिनमहिमदर्शन केषाञ्चिद्देवर्द्धिदर्शनम् ॥ एव प्रागानतात् ॥ आनतप्राणतारणाच्युतदेवाना देवर्द्धिदर्शन मुक्त्वाऽन्यत्रितयमप्यस्ति । नवग्रैवेयकवासिना केषाञ्चिज्जातिस्मरण केषाञ्चिद्धर्मश्रवणम् ॥ अनुदिशानुत्तरविमानवासिनामिय कल्पना न सम्भवति । प्रागेव गृहीतसम्यक्त्वाना

---

१ धर्मश्रुतिजातिस्मृतिसुरद्धिजिनमहिमदर्शनं वाह्यम् ॥ प्रथमदशोऽग विना सुरर्द्धीक्षयाऽऽनतादिभुवाम् ॥ १ ॥ ग्रैवेयकिणा पूर्व द्वे साजिनार्चेक्षणे नरतिरश्चाम्॥ सरुगभिभवे त्रिषु प्राक् श्वभ्रेष्वन्येषु सद्वितीया सा ॥ २ ॥

तत्रोत्पत्तेः ॥ [ ४ ] अधिकरणं द्विविधम् । आभ्यन्तरं बाह्यं च ॥ आभ्यन्तरं स्वस्वामिसम्बन्धार्ह एव आत्मा, विवक्षातः कारकप्रवृत्तेः ॥ बाह्यं लोकनाडी । सा कियती? । एकरज्जुविष्कम्भा चतुर्दशरज्ज्वायामा ॥ [ ५ ] स्थितिरौपशमिकस्य जघन्योत्कृष्टा चान्तर्मौहूर्तिकी । क्षायिकस्य संसारिणो जघन्यान्तर्मौहूर्तिकी । उत्कृष्टा त्रयस्त्रिंशत्सागरोपमाणि सान्तर्मुहूर्ताष्टवर्षहीनपूर्वकोटिद्वयाधिकानि । मुक्तस्य सादिरपर्यवसाना । क्षायोपशमिकस्य जघन्याऽन्तर्मौहूर्तिकी । उत्कृष्टा षट्षष्टिसागरोपमाणि ॥ [ ६ ] विधानं सामान्यादेकं सम्यग्दर्शनम् । द्वितयं निसर्गजाधिगमजभेदात् । एवं सङ्ख्येया विकल्पाः शब्दतः[1] ॥ असङ्ख्येया अनन्ताश्च भवन्ति श्रद्धातृश्रद्धातव्यभेदात् ॥ एवमयं निर्देशादिविधिर्ज्ञानचारित्रयोर्जीवाजीवादिषु चागमानुसारेण योजयितव्यः ॥

---

१ आज्ञामार्गसमुद्भवमुपदेशात्सूत्रबीजसंक्षेपात् ॥ विस्तारार्थाभ्यां भवमवपरमावादिगाढं च ॥ १ ॥ इति दशविधम् ॥ अस्या आर्याया विवरणार्थं वृत्तत्रयमाह ॥ तथाहि ॥ स्रग्धरा ॥ आज्ञासम्यक्त्वमुक्तं यदुत विरुचितं वीतरागाज्ञयैव । त्यक्तग्रन्थप्रपञ्चं शिवममृतपथं श्रद्दधन्मोहशान्तेः ॥ मार्गश्रद्धानमाहुः पुरुषवरपुराणोपदेशोपजाता । या संज्ञानागमाब्धिप्रसृतिभिरुपदेशादिरादेशि दृष्टिः ॥ १ ॥ आकर्ण्याचारसूत्रं मुनिचरणविधेः सूचनं श्रद्दधानः । सूक्ताऽसौ सूत्रदृष्टिर्दुरधिगमगतेरर्थसार्थस्य बीजैः ॥ कैश्चिज्जातोपलब्धेरसमशमवशाद्बीजदृष्टिः पदार्थान् । संक्षेपेणैव बुद्ध्वा रुचिमुपगतवान् साधुसंक्षेपदृष्टिः ॥ २ ॥ यः श्रुत्वा द्वादशाङ्गीं कृतरुचिरिह तं विद्धि विस्तारदृष्टिं । संजातार्थात्कुतश्चित्प्रवचनवचनान्यन्तरेणार्थदृष्टिः ॥ दृष्टिः साङ्गाङ्गबाह्यप्रवचनमवगाह्योत्थिता याऽवगाढा । कैवल्यालोकितार्थे रुचिरिह परमावादिगाढेति रूढा ॥ ३ ॥ इति श्रीगुणभद्रभदन्तेनात्मानुशासनप्रारम्भे उक्तम् । एवं सङ्ख्येयविकल्पा सम्यग्दर्शनप्ररूपकशब्दानां सङ्ख्यातत्वात् ॥

किमेतैरेव जीवादीनामधिगमो भवति उत अन्योऽप्यधिगमोपायोऽस्तीति परिपृष्टोऽस्तीत्याह—

॥सत्संख्याक्षेत्रस्पर्शनकालान्तरभावाल्पबहुत्वैश्च ॥८॥

सदित्यस्तित्वनिर्देशः । प्रशंसादिषु वर्तमानो नेह गृह्यते । सङ्ख्या भेदगणना । क्षेत्रं निवासो वर्तमानकालविषयः । तदेव स्पर्शनं त्रिकालगोचरम् । कालो द्विविधः । मुख्यो व्यावहारिकश्च । तयोरुत्तरत्र निर्णयो वक्ष्यते । अन्तरं विरहकालः । भावः औपशमिकादिलक्षणः । अल्पबहुत्वमन्योऽन्यापेक्षया विशेषप्रतिपत्तिः ॥ एतैश्च सम्यग्दर्शनादीनां जीवादीनां चाधिगमो वेदितव्यः ॥ ननु च " निर्देशादेव सद्ग्रहणं सिद्धम् । विधानग्रहणात्सङ्ख्यागतिः । अधिकरणग्रहणात्क्षेत्रस्पर्शनावबोधः । स्थितिग्रहणात्कालसङ्ग्रहः । भावो नामादिषु सङ्गृहीत एव । पुनरेषां किमर्थं ग्रहणमिति " ॥ सत्य, सिद्धम् । विनेयाशयवशात्तत्त्वदेशनाविकल्पः ॥ केचित्सङ्क्षेपरुचयः । अपरे नातिसङ्क्षेपेण नातिविस्तरेण प्रतिपाद्याः ॥ सर्वसत्त्वानुग्रहार्थो हि सतां प्रयास इति अधिगमाभ्युपायभेदोद्देशः कृतः । इतरथा हि " प्रमाणनयैरधिगमः " इत्यनेनैव सिद्धत्वादितरेषां ग्रहणमनर्थकं स्यात् ॥ तत्र जीवद्रव्यमधिकृत्य सदाद्यनुयोगद्वारनिरूपणं क्रियते ॥ जीवाश्चतुर्दशसु गुणस्थानेषु व्यवस्थिताः ॥ १ मिथ्यादृष्टिः । २ सासादनसम्यग्दृष्टिः । ३ सम्यङ्मिथ्यादृष्टिः । ४ असंयतसम्यग्दृष्टिः । ५ संयतासंयतः । ६ प्रमत्तसंयतः ।

---

१ साध्वर्चितप्रशस्तेषु सत्येऽस्तित्वे च सन्मतः । इति वचनात् ॥
२ नामादयस्त्रयो द्रव्यार्थिकनयविषयाः । भावः पर्यायार्थिकनयविषयो यतः ॥
३ प्रवेशमार्गः ।

७ अप्रमत्तसंयत । ८ अपूर्वकरणस्थाने उपशमक क्षपक । ९ अनिवृत्तिबादरसाम्परायस्थाने उपशमक क्षपक । १० सूक्ष्मसाम्परायस्थाने उपशमक क्षपक । ११ उपशान्तकषायवीतरागछद्मस्थ । १२ क्षीणकषायवीतरागछद्मस्थ । १३ सयोगकेवली । १४ अयोगकेवली चेति ॥ एतेषामेव जीवसमासानां निरूपणार्थं चतुर्दशमार्गणास्थानानि ज्ञेयानि ॥ गतीन्द्रिय–काय–योग–वेद–कषाय–ज्ञान–संयम–दर्शन–लेश्या–भव्य–सम्यक्त्व–संज्ञाऽऽहारका इति ॥ तत्र सत्प्ररूपणा द्विविधा, सामान्येन विशेषेण च ॥ सामान्येन तावत् अस्ति मिथ्यादृष्टिः । अस्ति सासादनसम्यग्दृष्टिरित्येवमादि ॥ विशेषेण—गत्यनुवादेन नरकगतौ सर्वासु पृथिवीषु आद्यानि चत्वारि गुणस्थानानि सन्ति । तिर्यग्गतौ तान्येव संयतासंयतस्थानाधिकानि सन्ति । मनुष्यगतौ चतुर्दशापि सन्ति । देवगतौ नारकवत् ॥ इन्द्रियानुवादेन एकेन्द्रियादिषु चतुरिन्द्रियपर्यन्तेषु एकमेव मिथ्यादृष्टिस्थानम् । पञ्चेन्द्रियेषु चतुर्दशापि सन्ति ॥ कायानुवादेन पृथिवीकायादिषु वनस्पतिकायान्तेषु एकमेव मिथ्यादृष्टिस्थानम् ॥ त्रसकायेषु चतुर्दशापि सन्ति ॥ योगानुवादेन त्रिषु योगेषु त्रयोदशगुणस्थानानि भवन्ति । ततः परं अयोगकेवली ॥ वेदानुवादेन त्रिषु वेदेषु मिथ्यादृष्ट्याद्यनिवृत्तिबादरान्तानि सन्ति । अपगतवेदेषु अनिवृत्तिबादराद्ययोगकेवल्यन्तानि ॥ कषायानुवा-

---

१ जीवा समस्यन्ते येष्विति जीवसमासा ॥ २ चतुर्दशगुणस्थानेषु वक्तव्यम् ॥ ३ अत्र अनिवृत्तिकरणसवेदभागो ग्राह्य ॥ ४ अत्रावेदभागानिवृत्तिकरणगुणस्थान ग्राह्यम् ॥ ( १ ) सम्यग्मिथ्यादृष्टे टिप्पणकारका-भिप्रायेण ज्ञातव्यम् ॥ इत्यप्यधिक पाठ पुस्तकान्तरे दृश्यते ॥

[ सम्यङ्मिथ्यादृष्टे ज्ञानमज्ञानं च केवलं न सम्भवति । तस्याज्ञानत्रयाधारत्वात् । उक्तं च “ मिस्से णाणत्तियमिस्स अण्णाणात्तियेणेति ” तेन ज्ञाना-

देन क्रोधमानमायासु मिथ्यादृष्ट्यादीनि अनिवृत्तिबादरस्थानान्तानि सन्ति । लोभकषाये तान्येव सूक्ष्मसाम्परायस्थानाधिकानि । अकषायः उपशान्तकषायः क्षीणकषाय. सयोगकेवली अयोगकेवली च ॥ ज्ञानानुवादेन मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानेषु मिथ्यादृष्टि सासादनसम्यग्दृष्टिश्चास्ति । ( १ ) आभिनिबोधिकश्रुतावधिज्ञानेषु असंयतसम्यग्दृष्ट्यादीनि क्षीणकषायान्तानि सन्ति । मन.पर्ययज्ञाने प्रमत्तसयतादयः क्षीणकषायान्ता· सन्ति । केवलज्ञाने सयोगोऽयोगश्च ॥ सयमानुवादेन सयता प्रमत्तादयोऽयोगकेवल्यन्ता. । सामायिकच्छेदोपस्थापनाशुद्धिसंयता. प्रमत्तादयोऽनिवृत्तिस्थानान्ताः । परिहारविशुद्धिसयताः प्रमत्ताप्रमत्ताश्च । सूक्ष्मसाम्परायशुद्धिसयता एकस्मिन्नेव सूक्ष्मसाम्परायस्थाने । यथाख्यातविहारशुद्धिसयता उपशान्तकषायादयोऽयोगकेवल्यन्ताः । सयतासयता एकस्मिन्नेव सयतासयतस्थाने । असयता आद्येषु चतुर्षु गुणस्थानेषु ॥ दर्शनानुवादेन चक्षुर्दर्शनाचक्षुर्दर्शनयोर्मिथ्यादृष्ट्यादीनि क्षीणकषायान्तानि सन्ति । अवधिदर्शने असंयतसम्यग्दृष्ट्यादीनि क्षीणकषायान्तानि । केवलदर्शने सयोगकेवली अयोगकेवली च ॥ लेश्यानुवादेन कृष्णनीलकपोतलेश्यासु मिथ्यादृष्ट्यादीनि असयतसम्यग्दृष्ट्यन्तानि सन्ति । तेज पद्मलेश्ययोर्मिथ्यादृष्ट्यादीनि अप्रमत्तस्थानान्तानि । शुक्ललेश्याया मिथ्यादृष्ट्यादीनि [1]सयोगकेवल्यन्तानि । अलेश्या अयोगकेवलिन ॥ भव्यानुवादेन भव्येषु चतुर्दशापि सन्ति । अभव्य आद्ये एव स्थाने ॥ सम्यक्त्वानुवादेन क्षायिकसम्यक्त्वे असयतसम्यग्दृष्ट्यादीनि अयो-

---

नुवादे मिथस्यानभिधानम् । तस्याज्ञानप्ररूपणायामेवा भिधान ज्ञातव्यम् । ज्ञानस्य यथार्थविपयत्वाभावात् ॥ इति श्रुतसागर ॥ ]

१ सयोगकेवलिनि औपचारिकी लेश्या ।

गकेवल्यन्तानि सन्ति। क्षायोपशमिकसम्यक्त्वे असंयतसम्यग्दृष्ट्यादीनि अप्रमत्तान्तानि। औपशमिकसम्यक्त्वे असंयतसम्यग्दृष्ट्यादीनि उपशान्तकषायान्तानि। सासादनसम्यग्दृष्टि. सम्यङ्मिथ्यादृष्टिर्मिथ्यादृष्टिश्च स्वे स्वे स्थाने॥ सज्ञानुवादेन संज्ञिषु द्वादशगुणस्थानानि क्षीणकषायान्तानि। असंज्ञिषु एकमेव मिथ्यादृष्टिस्थानम्। तदुभयव्यपदेशरहित. सयोगकेवली अयोगकेवली च॥ आहारानुवादेन आहारकेषु मिथ्यादृष्ट्यादीनि सयोगकेवल्यन्तानि। अनाहारकेषु विग्रहगत्यापन्नेषु त्रीणि गुणस्थानानि, मिथ्यादृष्टि सासादनसम्यग्दृष्टिरसंयतसम्यग्दृष्टिश्च। समुद्घातगत सयोगकेवली अयोगकेवली च। सिद्धा परमेष्ठिन. अतीतगुणस्थानाः॥ उक्ता सत्प्ररूपणा॥

सङ्ख्याप्ररूपणोच्यते— सा द्विविधा॥ सामान्येन तावत् जीवा मिथ्यादृष्टयोऽनन्तानन्ता.। सासादनसम्यग्दृष्टयः सम्यङ्मिथ्यादृष्टयोऽसंयतसम्यग्दृष्टय. सयतासयताश्च पल्योपमासङ्ख्येयभागप्रमिता.[1]॥ प्रमत्तसयता· कोटीपृथक्त्वसङ्ख्या[2]। पृथक्त्वमित्यागमसज्ञा तिसृणा कोटीनामुपरि नवानामध·॥ अप्रमत्तसयताः सङ्ख्येयाः[3]।

---

१ तथाहि। द्वितीये गुणस्थाने द्विपञ्चाशद्गुणकोट्य॥ ५२००००००००॥ तृतीयगुणस्थाने चतुरधिकाः शतकोट्य॥ १०४००००००००॥ चतुर्थगुणस्थाने सप्तशतकोट्य॥ ७०००००००००॥ पञ्चमगुणस्थाने त्रयोदशकोट्यः॥ १३००००००००॥ तथा चोक्तम्॥ गाथा॥ तेरहकोटी देसे बावण्णा सासणा मुणेयव्वा॥ मिस्सम्मि य तद्दूगा असजदा सत्तमप्प कोडीओ॥ १॥

२ तथापि प्रमत्तसंयता निर्द्धारयितुं शक्या। तेन तत्संख्या कथ्यते॥ कोटीपञ्चकं त्रिनवतिलक्षा अष्टानवतिसहस्रा शतद्वय पट् च वेदितव्या॥ ५९३९८२०६॥

३ सा संख्या न ज्ञायते इति चेदुच्यते॥ कोटीद्वय षण्णवतिलक्षा नवनावतिसहस्रा शतमेकमधिकम्॥ प्रमत्तसयतार्द्धपरिमाणा इत्यर्थ॥ २९६९९१००॥

चत्वार उपशमकाः प्रवेशेन एको वा द्वौ वा त्रयो वा । उत्कर्षेण चतुः-पञ्चाशत् । स्वकालेन समुदिताः संख्येयाः ॥ चत्वारः क्षपका अयोगकेवलिनश्च प्रवेशेन एको वा द्वौ वा त्रयो वा । उत्कर्षेणाष्टोत्तरशतसंख्या । स्वकालेन समुदिताः संख्येयाः ॥ सयोगकेवलिनः प्रवेशेन एको वा द्वौ वा त्रयो वा । उत्कर्षेणाष्टोत्तरशतसंख्या । स्वकालेन समुदिताः शतसहस्रपृथक्त्वसंख्याः ॥ विशेषेण गत्यनुवादेन— (१) नरकगतौ प्रथमायां पृथिव्यां नारका मिथ्यादृष्टयोऽसंख्येयाः श्रेणयः प्रतरासंख्येयभागप्रमिताः ॥ द्वितीयादिष्वा सप्तम्या मिथ्यादृष्टयः श्रेण्यसंख्येयभागप्रमिताः । स चासंख्येयभागः असंख्येया योजनकोट्यः । सर्वासु पृथिवीषु सासादनसम्यग्दृष्टयः सम्यङ्मिथ्यादृष्टयोऽसंयतसम्यग्दृष्टयश्च पल्योपमासंख्येयभागप्रमिताः ॥ तिर्यग्गतौ तिरश्चां मिथ्यादृष्टयोऽनन्तानन्ताः । सासादनसम्यग्दृष्टयः संयतासंयतान्ताः पल्योपमासंख्येयभागप्रमिताः ॥ मनुष्यगतौ मनुष्या मिथ्यादृष्टयः श्रेण्यसंख्येयभागप्रमिताः । स चासंख्येयभागः असंख्येया योजनकोट्यः । सासादनसम्यग्दृष्ट्यादयः संयतासंयतान्ताः संख्येयाः । प्रमत्तादीनां सामान्योक्ता संख्या ॥ देवगतौ देवा मिथ्यादृष्टयोऽसंख्येयाः श्रेणयः प्रतरासंख्येयभागप्रमिताः । सासादनसम्यग्दृष्टिसम्यङ्मिथ्यादृष्ट्यसंयतसम्यग्दृष्टयः पल्योपमासंख्येयभागप्रमिताः ॥ (२) इन्द्रियानुवादेन— एकेन्द्रिया मिथ्यादृष्टयोऽनन्तानन्ताः । द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रिया अस-

---

१ अपूर्वकरणानिवृत्तिकरणसूक्ष्मसांपरायोपशान्तकषायाश्चेति चत्वारः ॥

२ केयं श्रेणिरिति चेदुच्यते ॥ सप्तरज्जुस्सयी मुक्ताफलमालावदाकाशप्रदेशपङ्क्तिः श्रेणिरित्युच्यते ॥ मानविशेष इत्यर्थः ॥

३ प्रतरासंख्येयभागप्रमिता इति यदुक्तं स प्रतरः कियान् भवति? । श्रेणिगुणिता श्रेणिः प्रतर उच्यते ॥ प्रतरासंख्यातभागप्रमितानामसंख्यातानां श्रेणीनां यावन्तः प्रदेशास्तावन्तस्तत्र नारका इत्यर्थः ॥

ख्येया श्रेणय प्रतरासख्येयभागप्रमिता । पञ्चेन्द्रियेषु मिथ्यादृष्टयोऽसख्येया श्रेणय प्रतरासख्येयभागप्रमिता । सासादनसम्यग्दृष्ट्यादयोऽयोगकेवल्यन्ता सामान्योक्तसख्या ॥ (३) कायानुवादेन— पृथिवीकायिका अप्कायिकास्तेजःकायिका वायुकायिका असख्येयलोका । वनस्पतिकायिका अनन्तानन्ता । त्रसकायिकसंख्या पञ्चेन्द्रियवत् ॥ (४) योगानुवादेन— मनोयोगिनो वाग्योगिनश्च मिथ्यादृष्टयोऽसंख्येया श्रेणय प्रतरासंख्येयभागप्रमिता । काययोगिषु मिथ्यादृष्टयोऽनन्तानन्ता । त्रियोगिना सासादनसम्यग्दृष्ट्यादय संयतासयतान्ता पल्योपमासंख्येयभागप्रमिता । प्रमत्तसयतादय सयोगकेवल्यन्ता संख्येया । अयोगकेवलिन सामान्योक्तसङ्ख्या ॥ (५) वेदानुवादेन— स्त्रीवेदा पुंवेदाश्च मिथ्यादृष्टयोऽसङ्ख्येया श्रेणय प्रतरासंख्येयभागप्रमिता । नपुसकवेदा मिथ्यादृष्टयोऽनन्तानन्ता । स्त्रीवेदा नपुंसकवेदाश्च सासादनसम्यग्दृष्ट्यादय संयतासंयतान्ता सामान्योक्तसंख्या । प्रमत्तसयतादयोऽनिवृत्तिबादरान्ता सख्येया । पुंवेदा सासादनसम्यग्दृष्ट्यादय संयतासंयतान्ता सामान्योक्तसंख्या । प्रमत्तसंयतादयोऽनिवृत्तिबादरान्ता सामान्योक्तसख्या । अपगतवेदा अनिवृत्तिबादरादयोऽयोगकेवल्यन्ता सामान्योक्तसंख्या ॥ (६) कषायानुवादेन— क्रोधमानमायासु मिथ्यादृष्ट्यादय संयतासयतान्ता सामान्योक्तसंख्या । प्रमत्तसंयतादयोऽनिवृत्तिबादरान्ता सख्येया । लोभकषायाणामुक्त एव क्रम । अयं तु विशेष— सूक्ष्मसाम्परायसयता सामान्योक्तसंख्या । अकषाया उपशान्तकषायादयोऽयोगकेवल्यन्ता सामान्योक्तसख्या ॥ (७) ज्ञानानुवादेन— मत्यज्ञानिन श्रुताज्ञानिनश्च मिथ्यादृष्टिसासादनसम्यग्दृष्टय: सामान्योक्तसख्या: । विभङ्गज्ञानिनो मिथ्या-

दृष्टयोऽसंख्येयाः श्रेणयः प्रतरासंख्येयभागप्रमिताः। सासादनसम्यग्दृष्टय पल्योपमासंख्येयभागप्रमिता। मतिश्रुतज्ञानिनोऽसंयतसम्यग्दृष्ट्यादय. क्षीणकषायान्ता सामान्योक्तसंख्या। अवधिज्ञानिनोऽसंयतसम्यग्दृष्टिसंयतासंयतान्ता सामान्योक्तसंख्या। प्रमत्तसंयतादयः क्षीणकषायान्ताः संख्येया। मनःपर्ययज्ञानिन प्रमत्तसंयतादय· क्षीणकषायान्ताः संख्येया। केवलज्ञानिनः सयोगा अयोगाश्च सामान्योक्तसंख्या॥ (८) संयमानुवादेन— सामायिकच्छेदोपस्थापनशुद्धिसंयताः प्रमत्तादयोऽनिवृत्तिबादरान्ताः सामान्योक्तसंख्या·। परिहारविशुद्धिसंयता प्रमत्ताश्चाप्रमत्ताश्च संख्येयाः। सूक्ष्मसाम्परायशुद्धिसंयता यथाख्यातविहारशुद्धिसंयता संयतासंयता असंयताश्च सामान्योक्तसंख्या॥ (९) दर्शनानुवादेन— चक्षुर्दर्शनिनो मिथ्यादृष्टयोऽसंख्येयाः श्रेणय· प्रतरासंख्येयभागप्रमिताः। अचक्षुर्दर्शनिनो मिथ्यादृष्टयोऽनन्तानन्ता·। उभये च सासादनसम्यग्दृष्ट्यादयः क्षीणकषायान्ता. सामान्योक्तसंख्या.। अवधिदर्शनिनोऽवधिज्ञानिवत्। केवलदर्शनिनः केवलज्ञानिवत्॥ (१०) लेश्यानुवादेन— कृष्णनीलकपोतलेश्या मिथ्यादृष्ट्यादयोऽसंयतसम्यग्दृष्ट्यन्ता· सामान्योक्तसंख्याः। तेजःपद्मलेश्या मिथ्यादृष्ट्यादयः संयतासंयतान्ता. स्त्रीवेदवत्। प्रमत्ताप्रमत्तसंयता. संख्येया.। शुक्ललेश्या मिथ्यादृष्ट्यादयः संयतासंयतान्ता· पल्योपमासंख्येयभागप्रमिताः। प्रमत्ताप्रमत्तसंयताः संख्येयाः। अपूर्वकरणादयः सयोगकेवल्यन्ता अलेश्याश्च सामान्योक्तसंख्या.॥ (११) भव्यानुवादेन— भव्येषु मिथ्यादृष्ट्यादयोऽयोगकेवल्यन्ताः सामान्योक्तसंख्याः। अभव्या अनन्ता.॥ (१२) सम्यक्त्वानुवादेन— क्षायिकसम्यग्दृष्टिषु असंयतसम्यग्दृष्टयः पल्योपमासंख्येयभागप्रमिता·। संयतासंयतादय उप-

शान्तकषायान्ता सख्येया । चत्वार क्षपका सयोगकेवलिनोऽयोगकेवलिनश्च सामान्योक्तसख्या । क्षायोपशमिकसम्यग्दृष्टिषु असयतसम्यग्दृष्ट्यादयोऽप्रमत्तान्ता सामान्योक्तसख्या । औपशमिकसम्यग्दृष्टिषु असयतसम्यग्दृष्टिसयतासयता पल्योपमासख्येयभागप्रमिता.। प्रमत्ताप्रमत्तसयता सख्येया । चत्वार औपशमिका सामान्योक्तसख्या। सासादनसम्यग्दृष्टय सम्यङ्मिथ्यादृष्टयो मिथ्यादृष्टयश्च सामान्योक्तसख्या ॥ (१३) सज्ञानुवादेन— संज्ञिषु मिथ्यादृष्ट्यादय क्षीणकषायान्ताश्चक्षुर्दर्शनिवत् । असज्ञिनो मिथ्यादृष्टयोऽनन्तानन्ता । तदुभयव्यपदेशरहिता सामान्योक्तसख्या ॥ (१४) आहारानुवादेन— आहारकेषु मिथ्यादृष्ट्यादय सयोगकेवल्यन्ता सामान्योक्तसख्या । अनाहारकेषु मिथ्यादृष्टिसासादनसम्यग्दृष्ट्यसयतसम्यग्दृष्टय सामान्योक्तसख्या । सयोगकेवलिनः सख्येया । अयोगकेवलिन. सामान्योक्तसख्या । सख्या निर्णीता ॥

क्षेत्रमुच्यते— तत् द्विविधम् । सामान्येन विशेषेण च ॥ सामान्येन तावत् मिथ्यादृष्टीना सर्वलोकः[1] ॥ सासादनसम्यग्दृष्ट्यादीनामयोगकेवल्यन्ताना लोकस्यासख्येयभाग[2] ॥ सयोगकेवलिना

---

१ स्वस्थानस्वस्थाने वेदनाकषायमारणान्तिकसमुद्घातेषु उपपादे च एव पचसु पदेषु सर्वलोको मिथ्यादृष्टीना क्षेत्रम् ॥

२ सासादनस्य असंयतसम्यग्दृष्टेश्च स्वस्थानस्वस्थानविहारवत् ॥ स्वस्थानवेदनाकषायवैक्रियिकमारणान्तिकोपपादेषु लोकस्यासख्येयभाग क्षेत्रम ॥ मिश्रस्य तेष्विव मारणान्तिकोपपादरहितेषु । तद्रहितत्व कुत इति चेत्तस्य मारणान्तिकमरणयोरभावात् । तदपि कुत? 'मरणतसमुग्घादो वि य ण मिस्सम्मि' इत्यनेन 'मिस्सा आहारस्सानिस्सा' इत्यादिना च तयोः प्रतिषेधाभिधीयते ॥ एवं देशसंयतादिषु आगमानुसारेणावबोद्धव्यम् ॥

लोकस्यासङ्ख्येयभागः समुद्घातेऽसङ्ख्येया[1] वा[2] भागाः सर्वलोको वा ॥ विशेषेण— (१) गत्यनुवादेन नरकगतौ सर्वासु पृथिवीषु नारकाणां चतुर्षु गुणस्थानेषु लोकस्यासंख्येयभागः । तिर्यग्गतौ तिरश्चां मिथ्यादृष्ट्यादिसंयतासंयतान्तानां सामान्योक्तं क्षेत्रम् । मनुष्यगतौ मनुष्याणां मिथ्यादृष्ट्याद्ययोगकेवल्यन्तानां लोकस्यासङ्ख्येयभागः । सयोगकेवलिनां सामान्योक्तं क्षेत्रम् । देवगतौ देवानां सर्वेषां चतुर्षु गुणस्थानेषु लोकस्यासङ्ख्येयभागः ॥ (२) इन्द्रियानुवादेन— एकेन्द्रियाणां क्षेत्रं सर्वलोकः । विकलेन्द्रियाणां लोकस्यासङ्ख्येयभागः । पञ्चेन्द्रियाणां मनुष्यवत्[3] ॥ (३) कायानुवादेन— पृथिवीकायादिवनस्पतिकायिकान्तानां सर्वलोकः । त्रसकायिकानां पञ्चेन्द्रियवत् । (४) योगानुवादेन— वाङ्मानसयोगिनां मिथ्यादृष्ट्यादिसयोगकेवल्यन्तानां लोकस्यासङ्ख्येयभागः । काय-

---

१ एकस्मिन्काले सम्भवतां पूर्वोक्तशतसहस्रपृथक्त्वसङ्ख्यानां सयोगकेवलिनां स्वस्थानस्वस्थानविहारवत्स्वस्थानापेक्षया च लोकस्यासङ्ख्येयभागाः क्षेत्रम् ॥ असंख्येयभागा इति वचनेन प्रतरसमुद्घाते लोकस्यासंख्यातबहुभागमात्रं क्षेत्रमित्युक्तं ज्ञेयम् ॥ त्रिलोकसारे ' सत्तासीदी चदुस्सदेत्यादिना ' कथितेन सर्ववातवलयावरुद्धक्षेत्रेण ( एतावता १०२४१९८७१४८७ ) सर्वलोकासंख्यातैकभागमात्रेण हीनस्य सर्वलोकस्य तत्क्षेत्रत्वात् ॥ लोकपूरणापेक्षया सर्वलोकः क्षेत्रम् ॥

२ असङ्ख्येया वा भागा इति वाशब्देन समुद्घाते असङ्ख्येयभागोऽपि परामृष्टः । तेन दण्डकवाटसमुद्घातयोर्लोकस्यासङ्ख्येयभागः क्षेत्रमित्यवसेयम् ॥ तत्र आरोहणावरोहणापेक्षया उत्कर्षेण चत्वारिंशत्केवलिनः सम्भवन्ति । तथापि क्षेत्रं लोकस्यासङ्ख्येयभाग एव । उत्तरत्र सर्वत्र स्वस्थानादिपदानि यथासम्भवं योज्यानि ॥

३ भागहारभूतासङ्ख्यातस्यानेकविधत्वेन क्षेत्रस्य तारतम्यसद्भावेऽपि लोकस्यासङ्ख्येयभागत्वाविशेषान्मनुष्यवदिति वचनम् ॥

योगिनां मिथ्यादृष्ट्यादिसयोगकेवल्यन्तानामयोगकेवलिनां च सामान्योक्तं क्षेत्रम् ॥ (५) वेदानुवादेन— स्त्रीपुंवेदानां मिथ्यादृष्ट्याद्यनिवृत्तिबादरान्तानां लोकस्यासंख्येयभागः । नपुंसकवेदानां मिथ्यादृष्ट्याद्यनिवृत्तिबादरान्तानामपगतवेदानां च सामान्योक्तं क्षेत्रम् ॥ (६) कषायानुवादेन— क्रोधमानमायाकषायाणां लोभकषायाणां च मिथ्यादृष्ट्याद्यनिवृत्तिबादरान्तानां सूक्ष्मसाम्परायाणामकषायाणां च सामान्योक्तं क्षेत्रम् ॥ (७) ज्ञानानुवादेन— मत्यज्ञानिश्रुताज्ञानिनां मिथ्यादृष्टिसासादनसम्यग्दृष्टीनां सामान्योक्तं क्षेत्रम् । विभङ्गज्ञानिनां मिथ्यादृष्टिसासादनसम्यग्दृष्टीनां लोकस्यासंख्येयभागः । आभिनिबोधिकश्रुतावधिज्ञानिनामसंयतसम्यग्दृष्ट्यादीनां क्षीणकषायान्तानां मनःपर्ययज्ञानिनां च प्रमत्तादीनां क्षीणकषायान्तानां केवलज्ञानिनां सयोगानामयोगानां च सामान्योक्तं क्षेत्रम् ॥ (८) संयमानुवादेन— सामायिकच्छेदोपस्थापनाशुद्धिसंयतानां चतुर्णां परिहारविशुद्धिसंयतानां प्रमत्ताप्रमत्तानां सूक्ष्मसाम्परायशुद्धिसंयतानां यथाख्यातविहारशुद्धिसंयतानां चतुर्णां संयतासंयतानामसंयतानां च चतुर्णां सामान्योक्तं क्षेत्रम् ॥ (९) दर्शनानुवादेन— चक्षुर्दर्शनिनां मिथ्यादृष्ट्यादिक्षीणकषायान्तानां लोकस्यासंख्येयभागः[1] । अचक्षुर्दर्शनिनां मिथ्यादृष्ट्यादिक्षीणकषायान्तानां सामान्योक्तं क्षेत्रम् । अवधिदर्शनिनामवधिज्ञानिवत् । केवलदर्शनिनां केवलज्ञानिवत् ॥ (१०) लेश्यानुवादेन—कृष्णनीलकापोतलेश्यानां मिथ्यादृष्ट्याद्यसंयतसम्य-

---

१ वाङ्मानसयोगविशिष्टे सयोगकेवलिनि समुद्घातासम्भवोऽवगन्तव्यः ॥ ओरालं दंडदुगे कवाडजुगले य तस्स मिस्सो दु ॥ पदरे य लोगपूरे कम्मेव य होइ कम्मइयम् ॥ इत्यनेन तत्र काययोगस्यैव कथनात् । काययोगे तु स्वस्थानसमुद्घातसम्भवो भवति ॥

ग्दृष्ट्यन्ताना सामान्योक्त क्षेत्रम्। तेज·पद्मलेश्याना मिथ्यादृ-ष्ट्याद्यप्रमत्तान्ताना लोकस्यासख्येयभाग । शुक्ललेश्याना मिथ्या-दृष्ट्यादिक्षीणकषायान्ताना लोकस्यासख्येयभाग. । सयोगकेव-लिनामलेश्याना च सामान्योक्त क्षेत्रम् ॥ ( ११ ) भव्यानुवादेन भव्याना चतुर्दशाना सामान्योक्त क्षेत्रम्। अभव्याना सर्वलोकः ॥ ( १२ ) सम्यक्त्वानुवादेन— क्षायिकसम्यग्दृष्टीनामसंयतसम्यग्दृ-ष्ट्याद्ययोगकेवल्यन्ताना क्षायोपशमिकसम्यग्दृष्टीनामसंयतसम्यग्दृ-ष्ट्याद्यप्रमत्तान्तानामौपशमिकसम्यग्दृष्टीनामसंयतसम्यग्दृष्ट्याद्युपशा-न्तकषायान्ताना सासादनसम्यग्दृष्टीना सम्यग्मिथ्यादृष्टीना च सामा-न्योक्त क्षेत्रम् ( १३ ) सञ्ज्ञानुवादेन— सञ्ज्ञिना चक्षुर्दर्श-निवत्। असञ्ज्ञिना सर्वलोक । तदुभयव्यपदेशरहिताना सामा-न्योक्त क्षेत्रम् ॥ ( १४ ) आहारानुवादेन— आहारकाणा मिथ्यादृष्ट्यादिक्षीणकषायान्ताना सामान्योक्त क्षेत्रम्। सयोग-केवलिनां लोकस्यासख्येयभागः। अनाहारकाणा मिथ्यादृष्टिसा-सादनसम्यग्दृष्ट्यसंयतसम्यग्दृष्ट्ययोगकेवलिना सामान्योक्त क्षेत्रम् । सयोगकेवलिना लोकस्यासख्येयभागा सर्वलोको वा ॥ क्षेत्र-निर्णयः कृत ॥

स्पर्शनमुच्यते— तद् द्विविधम्। सामान्येन विशेषेण च ॥ सामान्येन तावत्— मिथ्यादृष्टिभि. सर्वलोक·

---

१ ये न सञ्ज्ञिनो नाप्यसंज्ञिनस्तेपाम् ॥ २ समुद्घातरहितत्वादित्यर्थ ॥

३ असख्यातयोजनकोट्याकाशप्रदेश परिमाणरज्जुस्तावदुच्यते । तल्लक्ष-णसमचतुरस्ररज्जुत्रिचत्वारिंशदधिकशतत्रयपरिमाणो लोक उच्यते । स लोको मिथ्यादृष्टिभि सर्वे स्पृष्ट । इत्युक्तलक्षणे लोक स्वस्थानविहार परस्थान-विहारो मारणान्तिकसमुद्घातश्च प्राणिभिर्विधीयते ॥

स्पृष्ट । सासादनसम्यग्दृष्टिभिर्लोकस्यासख्येयभाग. अष्टौ द्वादश वा चतुर्दशभागा देशोनाः । सम्यङ्मिथ्यादृष्ट्यसंयतसम्यग्दृष्टिभिर्लोकस्यासख्येयभाग· अष्टौ वा चतुर्दशभागा देशोना । संयतासंयतैर्लोकस्यासख्येयभाग. षट् चतुर्दशभागा वा देशोना । प्रमत्तसंयतादीनामयोगकेवल्यन्ताना क्षेत्रवत्स्पर्शनम् ॥ विशेषेण (१) गत्यनुवादेन— नरकगतौ प्रथमाया पृथिव्या नारकैश्चतुर्गुणस्थानैर्लोकस्यासख्येयभाग स्पृष्ट । द्वितीयादिषु प्राक्सप्तम्या मिथ्यादृष्टिभि· सासादनसम्यग्दृष्टिभिर्लोकस्यासख्येयभाग· एक द्वौ त्रय चत्वार पञ्च चतुर्दशभागा वा · देशोना. । सम्यङ्मिथ्यादृष्ट्यसंयतसम्यग्दृष्टिभिर्लोकस्यासख्येयभाग । सप्तम्या पृथिव्या मिथ्यादृष्टिभिर्लोकस्यासख्येयभाग षट् चतुर्दशभागा वा देशोना । शेषैस्त्रिभिर्लोकस्यासख्येयभाग ॥ तिर्यग्गतौ तिरश्चा तिर्यङ्मिथ्यादृष्टिभि सर्वलोक स्पृष्ट. । सासादनसम्यग्दृष्टिभि-

---

१ तत्र स्वस्थानविहारापेक्षया सासादनसम्यग्दृष्टिभिर्लोकस्यासख्येयभाग स्पृष्ट । एवमग्रेऽपि स्वस्थानविहारापेक्षया लोकस्यासंख्येयभागो ज्ञातव्य । परस्थानविहारापेक्षया तु सासादनदेवाना प्रथमपृथिवीनये विहारात् रज्जुद्वयम् । अच्युतान्तोपरिविहारात् षड्रज्जव । इत्यष्टौ द्वादश चतुर्दश भागा वा देशोना स्पृष्टा ॥ द्वादशभागा कथ स्पृष्टा इति चेदुच्यते । सप्तमपृथिव्या परित्यक्त सासादनादिगुणस्थान एव मारणान्तिक विदधातीति नियमात् ॥ षष्ठीतो मध्यलोके पञ्चरज्जव । सासादनो मारणान्तिक करोति । मध्यमलोकाच्च लोकाग्रे बादरपृथिवीकायिकबादराप्कायिकबादरवनस्पतिकायिकेषु उत्पद्यते इति सप्त रज्जव एव द्वादशरज्जवो भवन्ति । सासादनसम्यग्दृष्टिर्हि वायुकायिकेषु तेज कायिकेषु नरकेषु सर्वसूक्ष्मकायिकेषु चतुर्थस्थानकेषु नोत्पद्यत इति नियम ॥ तथा चोक्तम् ॥ गाथा ॥ ' वज्जिअ ठाणचउक्कं तेऊ वाऊ य णरय सुहुम च ॥ अण्णत्थ सव्वठाणे उववज्जदे सासणो जीवो ॥ १ ॥ ' देशोना इति कथम् ? केचित्प्रदेशा सासादनसम्यग्दर्शन योग्या न भवन्तीति देशोना । एवमुत्तरत्र सर्वत्रापि वेदितव्यम् ॥

र्लोकस्यासंख्येयभागः सप्त चतुर्दशभागा वा देशोनाः । सम्यङ्मिथ्यादृष्टिभिर्लोकस्यासंख्येयभागः । असंयतसम्यग्दृष्टिभिः संयतासंयतैर्लोकस्यासंख्येयभागः षट् चतुर्दशभागा वा देशोनाः ॥ मनुष्यगतौ मनुष्यैर्मिथ्यादृष्टिभिर्लोकस्यासंख्येयभागः सर्वलोको वा स्पृष्टः । सासादनसम्यग्दृष्टिभिर्लोकस्यासंख्येयभागः सप्त चतुर्दशभागा वा देशोनाः । सम्यङ्मिथ्यादृष्ट्यादीनामयोगकेवल्यन्तानां क्षेत्रवत्स्पर्शनम् ॥ देवगतौ देवैर्मिथ्यादृष्टिसासादनसम्यग्दृष्टिभिर्लोकस्यासंख्येयभागः अष्टौ नव चतुर्दशभागा वा देशोनाः । सम्यङ्मिथ्यादृष्ट्यसंयतसम्यग्दृष्टिभिर्लोकस्यासंख्येयभागः अष्टौ चतुर्दशभागा वा देशोनाः ॥ (२) इन्द्रियानुवादेन— एकेन्द्रियैः सर्वलोकः स्पृष्टः । विकलेन्द्रियैर्लोकस्यासंख्येयभागः सर्वलोको वा ॥ पञ्चेन्द्रियेषु मिथ्यादृष्टिभिर्लोकस्यासंख्येयभागः अष्टौ चतुर्दशभागा वा देशोनाः सर्वलोको वा । शेषाणां सामान्योक्तं स्पर्शनम् ॥ (३) कायानुवादेन— स्थावरकायिकैः सर्वलोकः स्पृष्टः ॥ त्रसकायिकानां पञ्चेन्द्रियवत् स्पर्शनम् ॥ (४) योगानुवादेन— वाङ्मानसयोगिभिर्मिथ्यादृष्टिभिर्लोकस्यासंख्येयभागः अष्टौ चतुर्दशभागा वा देशोनाः सर्वलोको वा । सासादनसम्यग्दृष्ट्यादीनां क्षीणकषायान्तानां सामान्योक्तं स्पर्शनम् । सयोगकेवलिनां लोकस्यासंख्येयभागः ॥ काययोगिनां मिथ्यादृष्ट्यादीनां सयोगकेवल्यन्तानामयोगकेवलिनां च सामान्योक्तं स्पर्शनम् ॥ (५) वेदानुवादेन— स्त्रीपुंवेदैर्मिथ्यादृष्टिभिर्लोकस्यासंख्येयभागः स्पृष्टः अष्टौ नव चतुर्दशभागा वा देशोनाः सर्वलोको वा । नपुंसकवेदेषु मिथ्यादृष्टीनां सासादनसम्यग्दृष्टीनां च सामान्योक्तं स्पर्शनम् । सम्यङ्मिथ्यादृष्टिभिर्लोकस्यासंख्येयभागः स्पृष्टः । सासादनसम्यग्दृष्टिभिर्लोकस्यासंख्येयभागः अष्टौ

नव चतुर्दशभागा वा देशोनाः। सम्यङ्मिथ्यादृष्ट्याद्यनिवृत्तिबादरान्ताना सामान्योक्त स्पर्शनम्। असयतसम्यग्दृष्टिभिः संयतासयतैर्लोकस्यासख्येयभाग. षट् चतुर्दशभागा वा देशोना·। प्रमत्ताद्यनिवृत्तिवादरान्तानामपगतवेदाना च सामान्योक्त स्पर्शनम्॥ (६) कषायानुवादेन— चतुष्कषायाणामकषायाणा च सामान्योक्त स्पर्शनम्॥ (७) ज्ञानानुवादेन— मत्यज्ञानिश्रुताज्ञानिना मिथ्यादृष्टिसासादनसम्यग्दृष्टीनां सामान्योक्त स्पर्शनम्। विभङ्गज्ञानिना मिथ्यादृष्टीना लोकस्यासख्येयभागः अष्टौ चतुर्दशभागा वा देशोना सर्वलोको[1] वा। सासादनसम्यग्दृष्टीना सामान्योक्त स्पर्शनम्। आभिनिबोधिकश्रुतावधिमनःपर्ययकेवलज्ञानिना सामान्योक्त स्पर्शनम्। (८) सयमानुवादेन— संयताना सर्वेषा सयतासयतानामसयताना[2] च सामान्योक्त स्पर्शनम्॥ (९) दर्शनानुवादेन— चक्षुर्दर्शनिना मिथ्यादृष्ट्यादिक्षीणकषायान्ताना पञ्चेन्द्रियवत्। अचक्षुर्दर्शनिना मिथ्यादृष्ट्यादिक्षीणकषायान्तानामवधिकेवलदर्शनिना च सामान्योक्त स्पर्शनम्॥ (१०) लेश्यानुवादेन— कृष्णनीलकापोतलेश्यैर्मिथ्यादृष्टिभिः सर्वलोक. स्पृष्ट.। सासादनसम्यग्दृष्टिभिर्लोकस्यासख्येयभाग. पञ्च[3] चत्वारो द्वौ चतुर्दशभागा वा देशोना·। द्वादशभागा कुतो न लभ्यन्ते इति चेत् तत्रावस्थितलेश्यापेक्षया

---

१ मनुष्यतिर्यग्विभङ्गज्ञानिभि क्रियमाणमारणान्तिकापेक्षया सर्वलोक इति वचनम्॥ देवाना नव चतुर्दशभागा इति पूर्वमुक्तत्वात्॥

२ मिथ्यादृष्ट्याद्यसयतसम्यग्दृष्ट्यन्तानाम्॥

३ काओ काओ काओ णीला णीला य णीलकिण्हा य। किण्हाय परमकिण्हा लेस्सा पढमादिपुढवीण॥१॥ अस्या गाथाया अर्थ कथ्यते— प्रथमाया पृथिव्या नारकाणा जघन्या कपोतलेश्या भवति॥ द्वितीयाया मध्यमा। तृतीयायामष्टास्विन्द्रकेषु उत्कृष्टा। सैव चरमेन्द्रके उत्कृष्टा तत्रैव च केषाचिन्नारकाणा जघन्या नीललेश्या च भवति।

